# Taittirīya-Āraṇyaka

Edited by Subramania Sarma, Chennai

Proofread Version of November 2005

## Chapter 3

[[3-0-0]]
तच्छंयोरावृणीमहे।
गातुं यज्ञाय।
गातुं यज्ञपतये।
दैवीं स्वस्तिरस्तु नः।
स्वस्तिर्मानुषेभ्यः।
ऊर्ध्वं जिगातु भेषजम्।
शं नो अस्तु द्विपदे।
शं चतुष्पदे॥
ॐ शान्तिः शान्तिः शान्तिः॥

[[3-1-1]]
चित्तिस्स्रुक्।
चित्तमाज्यम्।
वाग्वेदिः।
आधीतं बर्हिः।
केतो अग्निः।
विज्ञातमग्निः।
वाक्पतिर्होता।
मन उपवक्ता।
प्राणो हविः।
सामाध्वर्युः।
वाचस्पते विधे नामन्न्।

विधेम ते नाम।
विधेस्त्वमस्माकं नाम।
वाचस्पतिस्सोमं पिबतु।
आऽस्मासु नृम्णं धात्स्वाहा॥ १॥
अध्वर्युः पञ्च च॥ १॥

[[3-2-1]]
पृथिवी होता।
द्यौरध्वर्युः।
रुद्रोऽग्नीत्।
बृहस्पतिरुपवक्ता।
वाचस्पते वाचो वीर्येण।
संभृततमेनायक्ष्यसे।
यजमानाय वार्यम्।
आ सुवस्करस्मै।
वाचस्पतिस्सोमं पिबति।
जजनदिन्द्रमिन्द्रियाय स्वाहा॥ २॥
पृथिवी होता दश॥ २॥

[[3-3-1]]
अग्निर्होता।
अश्विनाऽध्वर्यू।
त्वष्टाऽग्नीत्।
मित्र उपवक्ता।
सोमस्सोमस्य पुरोगाः।
शुक्रश्शुक्रस्य पुरोगाः।
श्रातास्त इन्द्र सोमाः।
वातापेर्हवनश्रुतस्स्वाहा॥ ३॥
अग्निर्होताऽष्टौ॥ ३॥

[[3-4-1]]

सूर्यं ते चक्षुः।
वातं प्राणः।
द्यां पृष्ठम्।
अन्तरिक्षमात्मा।
अङ्गैर्यज्ञम्।
पृथिवीꣳ शरीरैः।
वाचस्पतेऽच्छिद्रया वाचा।
अच्छिद्रया जुह्वा।
दिवि देवावृधꣳ होत्रामेरयस्व स्वाहा॥ ४॥
सूर्यं ते नव॥ ४॥

[[3-5-1]]
महाहविर्होता।
सत्यहविरध्वर्युः।
अच्युतपाजा अग्नीत्।
अच्युतमना उपवक्ता।
अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ।
अयास्य उद्गाता।
वाचस्पते हृद्विधे नामन्न्।
विधेम ते नाम।
विधेस्त्वमस्माकं नाम।
वाचस्पतिस्सोममपात्।
मा दैव्यस्तन्तुश्छेदि मा मनुष्यः।
नमो दिवे।
नमः पृथिव्यै स्वाहा॥ ५॥
अपात्त्रीणि च॥ ५॥

[[3-6-1]]
वाग्घोता।
दीक्षा पत्नी।

वातोऽध्वर्युः।
आपोऽभिगरः।
मनो हविः।
तपसि जुहोमि।
भूर्भुवस्सुवः।
ब्रह्म स्वयम्भु।
ब्रह्मणे स्वयम्भुवे स्वाहा॥ ६॥
वाग्घोता नव॥ ६॥

[[3-7-1]]
ब्राह्मण एकहोता।
स यज्ञः।
स मे ददातु प्रजां पशून्पुष्टिं यशः।
यज्ञश्च मे भूयात्।
अग्निर्द्विहोता।
स भर्ता।
स मे ददातु प्रजां पशून्पुष्टिं यशः।
भर्ता च मे भूयात्।
पृथिवी त्रिहोता।
स प्रतिष्ठा॥ ७॥

[[3-7-2]]
स मे ददातु प्रजां पशून्पुष्टिं यशः।
प्रतिष्ठा च मे भूयात्।
अन्तरिक्षं चतुर्होता।
स विष्ठाः।
स मे ददातु प्रजां पशून्पुष्टिं यशः।
विष्ठाश्च मे भूयात्।
वायुः पञ्चहोता।
स प्राणः।

स मे ददातु प्रजां पशून्पुष्टिं यशः।
प्राणश्च मे भूयात्॥ ८॥

[[3-7-3]]
चन्द्रमाष्षड्ढोता।
स ऋतून्कल्पयाति।
स मे ददातु प्रजां पशून्पुष्टिं यशः।
ऋतवश्च मे कल्पन्ताम्।
अन्नꣳ सप्तहोता।
स प्राणस्य प्राणः।
स मे ददातु प्रजां पशून्पुष्टिं यशः।
प्राणस्य च मे प्राणो भूयात्।
द्यौरष्टहोता।
सोऽनाधृष्यः॥ ९॥

[[3-7-4]]
स मे ददातु प्रजां पशून्पुष्टिं यशः।
अनाधृष्यश्च भूयासम्।
आदित्यो नवहोता।
स तेजस्वी।
स मे ददातु प्रजां पशून्पुष्टिं यशः।
तेजस्वी च भूयासम्।
प्रजापतिर्दशहोता।
स इदꣳ सर्वम्।
स मे ददातु प्रजां पशून्पुष्टिं यशः।
सर्वं च मे भूयात्॥ १०॥
प्रतिष्ठा प्राणश्च मे भूयादनाधृष्यस्सर्वं च मे भूयात्॥ ७॥

ब्राह्मणो यज्ञोऽग्निर्भर्ता पृथिवी प्रतिष्ठाऽन्तरिक्षं विष्ठा वायुः प्राणश्चन्द्रमा ऋतूनन्नं प्राणस्य प्राणो द्यौरनाधृष्य आदित्यस्स तेजस्वी प्रजापतिरिदꣳ सर्वम्॥

[[3-8-1]]
अ॒ग्निर्यजु॑र्भिः।
स॒वि॒ता स्तोमै᳚ः।
इन्द्र॑ उक्थाम॒दैः।
मि॒त्रावरु॑णावा॒शिषा᳚।
अङ्गि॑रसो॒ धिष्णि॑यैर॒ग्निभि॑ः।
म॒रुत॑स्सदोह॒विर्धा॒नाभ्या᳚म्।
आप॒ः प्रोक्ष॑णीभिः।
ओष॑धयो ब॒र्हिषा᳚।
अदि॑ति॒र्वेद्या᳚।
सोमो॑ दी॒क्षया᳚॥ ११॥

[[3-8-2]]
त्वष्टे॒ध्मेन॑।
विष्णु॑र्य॒ज्ञेन॑।
वस॑व॒ आज्ये॑न।
आ॒दि॒त्या दक्षि॑णाभिः।
विश्वे॑ दे॒वा ऊ॒र्जा।
पू॒षा स्व॑गाका॒रेण॑।
बृह॒स्पति॑ः पुरो॒धया᳚।
प्र॒जाप॑तिरुद्गी॒थेन॑।
अ॒न्तरि॑क्षं प॒वित्रे॑ण।
वा॒युः पात्रै᳚ः।
अ॒ह॒ꣳ श्र॒द्धया᳚॥ १२॥
दी॒क्षया॒ पात्रै॒रेक॑ञ्च॥ ८॥

[[3-9-1]]
सेनेन्द्र॑स्य।
धेना॒ बृह॒स्पते᳚ः।
प॒थ्या॑ पू॒ष्णः।

वाग्वायोः।
दीक्षा सोमस्य।
पृथिव्यग्नेः।
वसूनां गायत्री।
रुद्राणां त्रिष्टुक्।
आदित्यानां जगती।
विष्णोरनुष्टुक्॥ १३॥

[[3-9-2]]
वरुणस्य विराट्।
यज्ञस्य पङ्क्तिः।
प्रजापतेरनुमतिः।
मित्रस्य श्रद्धा।
सवितुः प्रसूतिः।
सूर्यस्य मरीचिः।
चन्द्रमसो रोहिणी।
ऋषीणामरुन्धती।
पर्जन्यस्य विद्युत्।
चतस्रो दिशः।
चतस्रोऽवान्तर्दिशाः।
अहश्च रात्रिश्च।
कृषिश्च वृष्टिश्च।
त्विषिश्चापचितिश्च।
आपश्चौषधयश्च।
ऊर्क्च सूनृता च देवानां पत्नयः॥ १४॥
अनुष्टुग्दिशाष्षट्॥ ९॥

[[3-10-1]]
देवस्य त्वा सवितुः प्रसवे।
अश्विनोर्बाहुभ्याम्।

पूष्णो हस्ताभ्यां प्रतिगृह्णामि।
राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यम्।
तेनामृतत्वमश्याम्।
वयो दात्रे।
मयो मह्यमस्तु प्रतिग्रहीत्रे।
क इदं कस्मा अदात्।
कामः कामाय।
कामो दाता॥ १५॥

[[3-10-2]]
कामः प्रतिगृहीता।
कामꣳ समुद्रमाविश।
कामेन त्वा प्रतिगृह्णामि।
कामैतत्ते।
एषा ते काम दक्षिणा।
उत्तानस्त्वाऽऽङ्गिरसः प्रतिगृह्णातु।
सोमाय वासः।
रुद्राय गाम्।
वरुणायाश्वम्।
प्रजापतये पुरुषम्॥ १६॥

[[3-10-3]]
मनवे तल्पम्।
त्वष्ट्रेऽजाम्।
पूष्णेऽविम्।
निर्ऋत्या अश्वतरगर्दभौ।
हिमवतो हस्तिनम्।
गन्धर्वाप्सराभ्यस्स्रगलङ्करणे।
विश्वेभ्यो देवेभ्यो धान्यम्।
वाचेऽन्नम्।

ब्रह्म॑ण ओद॒नम्।
स॒मु॒द्रायाप॑ः॥ १७॥

[[3-10-4]]
उ॒त्ताना॒या᳚ङ्गि॒रसायान॑ः।
वै॒श्वा॒न॒रा॒य॒ रथ᳚म्।
वै॒श्वा॒न॒रः प्र॒त्नथा॒ नाक॒मारु॑हत्।
दि॒वः पृ॒ष्ठं भन्द॑मानस्सु॒मन्म॑भिः।
स पू᳚र्व॒वज्ज॒न्तवे॒ धन᳚म्।
स॒मा॒नम॑ज्मा॒ परि॑याति॒ जागृ॑विः।
राजा᳚ त्वा॒ वरु॑णो नयतु देवि दक्षिने वैश्वा॒न॒रा॒य॒ रथ᳚म्।
तेना॑मृत॒त्वम॑श्याम्।
वयो᳚ दा॒त्रे।
मयो॒ मह्य॑मस्तु प्रतिग्रही॒त्रे॥ १८॥

[[3-10-5]]
क इ॒दं कस्मा॑ अदात्।
काम॒ः कामा॑य।
कामो᳚ दा॒ता।
काम॑ः प्रतिग्रही॒ता।
कामा॑ꣳ समु॒द्रमावि॑श।
कामे॑न त्वा॒ समु॒द्रमावि॑श।
कामे॑न त्वा॒ प्रति॑गृह्णामि।
कामै॒तत्ते᳚।
ए॒षा ते॑ काम॒ दक्षि॑णा।
उ॒त्ता॒नस्त्वा᳚ऽऽङ्गि॒रसः प्रति॑गृह्णातु॥ १९॥
दा॒ता पुरु॑ष॒माप॑ः प्रतिग्रही॒त्रे नव॑ च॥ १०॥

[[3-11-1]]
सु॒वर्न॑ घ॒र्मं परि॑वेद वे॒नम्।
इन्द्र॑स्या॒त्मानं॑ दश॒धा चर॑न्तम्।

अ॒न्तस्स॑मु॒द्रे मन॑सा॒ चर॑न्तम्।
ब्रह्माऽन्व॑विन्दद्द॒शहो॑ता॒रमर्णे॒।
अ॒न्तः प्रवि॑ष्टश्शा॒स्ता जना॑नाम्।
एक॒स्सन्ब॑हु॒धा वि॑चारः।
श॒तꣳ शु॒क्राणि॒ यत्रैकं॒ भव॑न्ति।
सर्वे॒ वेदा॒ यत्रैकं॒ भव॑न्ति।
सर्वे॒ होता॑रो॒ यत्रैकं॒ भव॑न्ति।
स॒ मान॑सीन आ॒त्मा जना॑नाम्॥ २०॥

[[3-11-2]]
अ॒न्तः प्रवि॑ष्टश्शा॒स्ता जना॑ना॒ꣳ सर्वा॑त्मा।
सर्वाः॑ प्र॒जा यत्रैकं॒ भव॑न्ति।
चतु॑र्हो॑तारो॒ यत्र॑ स॒म्पदं॒ गच्छ॑न्ति दे॒वैः।
स॒ मान॑सीन आ॒त्मा जना॑नाम्।
ब्रह्मेन्द्र॑म॒ग्निं जग॑तः प्रति॒ष्ठाम्।
दि॒व आ॒त्मान॑ꣳ सवि॒तारं॒ बृह॒स्पति॑म्।
चतु॑र्हो॑तारं प्र॒दिशोऽनु॒क्लृप्तम्।
वा॒चो वी॒र्यं॑ तप॒साऽन्व॑विन्दत्।
अ॒न्तः प्रवि॑ष्टं क॒र्तार॑मे॒तम्।
त्वष्टा॑रꣳ रू॒पाणि॑ विकु॒र्वन्तं॑ विप॒श्चिम्॥ २१॥

[[3-11-3]]
अ॒मृत॑स्य प्रा॒णं य॒ज्ञमे॒तम्।
चतु॑र्हो॑तृणामा॒त्मानं॑ क॒वयो॒ निचि॑क्युः।
अ॒न्तः प्रवि॑ष्टं क॒र्तार॑मे॒तम्।
दे॒वानां॒ बन्धु॒ निहि॑तं॒ गुहा॑सु।
अ॒मृते॑न क्लृ॒प्तं य॒ज्ञमे॒तम्।
चतु॑र्हो॑तृणामा॒त्मानं॑ क॒वयो॒ निचि॑क्युः।
श॒तं नि॒युतः॒ परि॑वेद॒ विश्वा॑ वि॒श्ववा॑रः।
विश्व॑मि॒दं वृ॑णाति।

इन्द्र॑स्या॒त्मा निहि॑तः पञ्च॑होता।
अ॒मृतं॑ दे॒वाना॒मायु॑ः प्र॒जाना᳚म्॥ २२॥

[[3-11-4]]
इन्द्र॒ꣳ राजा॑नꣳ सवि॒तार॑मे॒तम्।
वा॒योरा॒त्मानं॑ क॒वयो॒ निचि॑क्युः।
र॒श्मिꣳ र॑श्मी॒नां मध्ये॒ तप॑न्तम्।
ऋ॒तस्य॑ प॒दे क॒वयो॒ निपा᳚न्ति।
य आ᳚ण्डको॒शे भुव॑नं बि॒भर्ति॑।
अनि॑र्भिण्ण॒स्सन्नथ॑ लो॒कान्वि॒चष्टे᳚।
यस्या᳚ण्डको॒शꣳ शुष्म॑मा॒हुः प्रा॒णमु॒ल्ब᳚म्।
तेन॑ क्लृ॒प्तो॑ऽमृते॑ना॒हम॑स्मि।
सु॒वर्णं॒ कोश॒ꣳ रज॑सा॒ परी॑वृतम्।
दे॒वाना᳚ं वसु॒धानी᳚ं वि॒राज᳚म्॥ २३॥

[[3-11-5]]
अ॒मृत॑स्य पू॒र्णां तामु॑ क॒लां विच॑क्षते।
पाद॒ꣳ षड्ढो॑तु॒र्न किला॑ विवित्से।
येन॒र्तव॑ः पञ्च॒धोत क्लृ॒प्ताः।
उ॒त वा॑ ष॒ड्धा म॒नसोत क्लृ॒प्ताः।
तꣳ षड्ढो॑तारमृ॒तुभि॒ः कल्प॑मानम्।
ऋ॒तस्य॑ प॒दे क॒वयो॒ निपा᳚न्ति।
अ॒न्तः प्रवि॑ष्टं क॒र्तार॑मे॒तम्।
अ॒न्तश्च॒न्द्रम॑सि॒ मन॑सा॒ चर॑न्तम्।
स॒हैव सन्तं॒ न विजा॑नन्ति दे॒वाः।
इन्द्र॑स्या॒त्मान॑ꣳ श॒तधा॒ चर॑न्तम्॥ २४॥

[[3-11-6]]
इन्द्रो॒ राजा॒ जग॑तो॒ य ईशे᳚।
स॒प्तहो॑ता स॒प्तधा॒ विक्लृ॑प्तः।
परे॑ण॒ तन्तुं॑ परिषि॒च्यमा॑नम्।

अ॒न्तरा॑दि॒त्ये मन॑सा॒ चर॑न्तम्।
दे॒वाना॒ꣳ॒ हृद॑यं॒ ब्रह्माऽन्व॑विन्दत्।
ब्रह्मै॒तद्ब्रह्म॑ण॒ उज्ज॑भार।
अ॒र्कꣴश्चोत॑न्तꣳ सरि॒रस्य॒ मध्ये᳚।
आ यस्मि॑न्थ्स॒प्त पे॑रवः।
मेह॑न्ति बहु॒लाꣳ श्रिय᳚म्।
ब॒ह्व॒श्वामि॑न्द्र॒ गोम॑तीम्॥ २५॥

[[3-11-7]]
अच्यु॑तां बहु॒लाꣳ श्रिय᳚म्।
स हरि॑र्वसु॒वित्त॑मः।
पे॒रुरिन्द्रा॑य पिन्वते।
ब॒ह्व॒श्वामि॑न्द्र॒ गोम॑तीम्।
अच्यु॑तां बहु॒लाꣳ श्रिय᳚म्।
मह्यमिन्द्रो॒ निय॑च्छतु।
श॒तꣳश॒ता अ॑स्य यु॒क्ता हरी॑णाम्।
अ॒र्वाङा या॑तु वसु॑भी र॒श्मिरिन्द्र॑ः।
प्रमꣳह॑माणो बहु॒लाꣳ श्रिय᳚म्।
र॒श्मिरिन्द्र॑स्सवि॒ता मे॒ निय॑च्छतु॥ २६॥

[[3-11-8]]
घृतन्तेजो॒ मधु॑मदिन्द्रि॒यम्।
मय्य॒यम॒ग्निर्द॑धातु।
हरि॑ः पत॒ङ्गः प॑ट॒री सु॑प॒र्णः।
दि॒वि॒क्षयो॒ नभ॑सा॒ य एति॑।
स न॒ इन्द्र॑ः कामव॒रं द॑दातु।
पञ्चा॑रं च॒क्रं परि॑वर्तते पृ॒थु।
हिर॑न्यज्योतिस्सरि॒रस्य॒ मध्ये᳚।
अजस्रं॒ ज्योति॒र्नभ॑सा॒ सर्प॑देति।
स न॒ इन्द्र॑ः कामव॒रं द॑दातु।

स॒प्त यु॑ञ्जन्ति॒ रथ॒मेक॑चक्रम्॥ २७॥

[[3-11-9]]
एको॒ अश्वो॑ वहति स॒प्तना॑मा।
त्रि॒नाभि॑ च॒क्रम॒जर॒मन॒र्वम्।
येने॒मा विश्वा॒ भुव॑नानि त॒स्थुः।
भ॒द्रं पश्य॑न्त॒ उप॑से॒दुरग्रे॑।
तपो॑ दी॒क्षामृष॑यस्सु॒वर्वि॑दः।
तत॑ः क्ष॒त्रं बल॒मोज॑श्च जा॒तम्।
तद॒स्मै दे॒वा अ॒भिसन्न॑मन्तु।
श्वे॒तꣳ र॒श्मिं बो॑भु॒ज्यमा॑नम्।
अ॒पान्ने॒तारं॒ भुव॑नस्य गो॒पाम्।
इन्द्रं॒ निचि॑क्युः प॒रमे व्यो॑मन्॥ २८॥

[[3-11-10]]
रोहि॑णीः पि॒ङ्गला एक॑रूपाः।
क्षर॑न्तीः पि॒ङ्गला एक॑रूपाः।
श॒तꣳ स॒हस्रा॑णि प्र॒युता॑नि॒ नव्या॑नाम्।
अ॒यं यश्श्वे॒तो र॒श्मिः।
परि॒ सर्वं॑मि॒दं जग॑त्।
प्र॒जां प॒शून्धना॑नि।
अ॒स्माकं॑ ददातु।
श्वे॒तो र॒श्मिः परि॒ सर्वं॑ बभूव।
सु॒वन्मह्यं॑ प॒शून्वि॒श्वरू॑पान्।
प॒त॒ङ्ग॒मक्तमसु॑रस्य मा॒यया॑॥ २९॥

[[3-11-11]]
हृ॒दा प॑श्यन्ति॒ मन॑सा मनी॒षिन॑ः।
स॒मु॒द्रे अ॒न्तः क॒वयो॒ विच॑क्षते।
मरी॑चीनां प॒दमि॑च्छन्ति वे॒धस॑ः।
प॒त॒ङ्गो वाचं॒ मन॑सा बिभर्ति।

तां गन्धर्वोऽवदद्गर्भे अन्तः।
तां द्योतमानाꣳस्वर्यं मनीषाम्।
ऋतस्य पदे कवयो निपान्ति।
ये ग्राम्याः पशवो विश्वरूपाः।
विरूपास्सन्तो बहुधैकरूपाः।
अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः॥ ३०॥

[[3-11-12]]
प्रजापतिः प्रजया संविदानः।
वीतꣳ स्तुकेस्तुके।
युवमस्मासु नियच्छतम्।
प्रप्र यज्ञपतिन्तिर।
ये ग्राम्याः पशवो विश्वरूपाः।
विरूपास्सन्तो बहुधैकरूपाः।
तेषाꣳ सप्तानामिह रन्तिरस्तु।
रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय।
य आरण्याः पशवो विश्वरूपाः।
विरूपास्सन्तो बहुधैकरूपाः॥ ३१॥

[[3-11-13]]
वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः।
प्रजापतिः प्रजया संविदानः।
इडायै सृप्तं घृतवच्चराचरम्।
देवा अन्वविन्दन्गुहाहितम्।
य आरण्याः पशवो विश्वरूपाः।
विरूपास्सन्तो बहुधैकरूपाः।
तेषाꣳ सप्तानामिह रन्तिरस्तु।
रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय॥ ३२॥
आत्मा जनानां विकुर्वन्तं विपश्चिं प्रजानां वसुधानीं विराजं चरन्तं गोमतीं मे नियच्छत्वेकचक्रं व्योमन्मायया देव एकरूपा अष्टौ च॥ ११॥

[[3-12-1]]
स॒हस्र॑शीर्षा॒ पुरु॑षः।
स॒ह॒स्रा॒क्षस्स॒हस्र॑पात्।
स भूमिं॑ वि॒श्वतो॑ वृ॒त्वा।
अत्य॑तिष्ठद्दशाङ्गु॒लम्।
पुरु॑ष ए॒वेदꣳ सर्व᳚म्।
यद्भू॒तं यच्च॒ भव्य᳚म्।
उ॒तामृ॑त॒त्वस्येशा॑नः।
य॒दन्ने॑नाति॒रोह॑ति।
ए॒तावा॑नस्य महि॑मा।
अतो॒ ज्याया॑ꣳश्च॒ पूरु॑षः॥ ३३॥

[[3-12-2]]
पादो᳚ऽस्य॒ विश्वा॑ भू॒तानि॑।
त्रि॒पाद॑स्या॒मृतं॑ दि॒वि।
त्रि॒पादू॒र्ध्व उदै॒त्पुरु॑षः।
पादो᳚ऽस्ये॒हाभ॑वा॒त्पुन॑ः।
ततो॒ विश्व॒ङ्व्य॑क्रामत्।
सा॒श॒ना॒न॒श॒ने अ॒भि।
तस्मा᳚द्वि॒राड॑जायत।
वि॒राजो॒ अधि॒ पूरु॑षः।
स जा॒तो अत्य॑रिच्यत।
प॒श्चाद्भूमि॒मथो॑ पु॒रः॥ ३४॥

[[3-12-3]]
यत्पुरु॑षेण ह॒विषा᳚।
दे॒वा य॒ज्ञमत॑न्वत।
व॒स॒न्तो अ॑स्यासी॒दाज्य᳚म्।
ग्री॒ष्म इ॒ध्मश्श॒रद्ध॒विः।
स॒प्तास्या॑सन्परि॒धय॑ः।

त्रिस्स॒प्त स॒मिधः॑ कृ॒ताः।
दे॒वा यद्य॒ज्ञं त॑न्वा॒नाः।
अब॑ध्न॒न्पुरु॑षं प॒शुम्।
तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॑न्न्।
पुरु॑षं जा॒तम॑ग्र॒तः॥ ३५॥

[[3-12-4]]
तेन॑ दे॒वा अय॑जन्त।
सा॒ध्या ऋष॑यश्च॒ ये।
तस्मा᳚द्य॒ज्ञाथ्स॑र्व॒हुतः॑।
संभृ॑तं पृषदा॒ज्यम्।
प॒शूꣳस्ताꣳश्च॑क्रे वाय॒व्या॑न्।
आ॒र॒ण्यान्ग्रा॒म्याश्च॒ ये।
तस्मा᳚द्य॒ज्ञाथ्स॑र्व॒हुतः॑।
ऋच॒स्सामा॑नि जज्ञिरे।
छन्दा॑ꣳसि जज्ञिरे॒ तस्मा᳚त्।
यजु॒स्तस्मा॑दजायत॥ ३६॥

[[3-12-5]]
तस्मा॒दश्वा॑ अजायन्त।
ये के चो॑भ॒याद॑तः।
गावो॑ ह जज्ञिरे॒ तस्मा᳚त्।
तस्मा᳚ज्जा॒ता अ॑जा॒वयः॑।
यत्पुरु॑षं॒ व्य॑दधुः।
क॒ति॒धा व्य॑कल्पयन्न्।
मुखं॒ किम॑स्य॒ कौ बा॒हू।
कावू॒रू पादा॑वुच्येते।
ब्रा॒ह्म॒णो᳚ऽस्य॒ मुख॑मासीत्।
बा॒हू रा॑ज॒न्यः॑ कृ॒तः॥ ३७॥

[[3-12-6]]

ऊरू तदस्य यद्वैश्यः।
पद्भ्याꣳ शूद्रो अजायत।
चन्द्रमा मनसो जातः।
चक्षोस्सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च।
प्राणाद्वायुरजायत।
नाभ्या आसीदन्तरिक्षम्।
शीर्ष्णो द्यौस्समवर्तत।
पद्भ्यां भूमिर्दिशश्श्रोत्रात्।
तथा लोकाꣳ अकल्पयन्न्॥ ३८॥

[[3-12-7]]
वेदाहमेतं पुरुषं महान्तम्।
आदित्यवर्णं तमसस्तु पारे।
सर्वाणि रूपाणि विचित्य धीरः।
नामानि कृत्वाऽभिवदन्यदास्ते।
धाता पुरस्ताद्यमुदाजहार।
शक्रः प्रविद्वान्प्रदिशश्चतस्रः।
तमेवं विद्वानमृत इह भवति।
नान्यः पन्था अयनाय विद्यते।
यज्ञेन यज्ञमयजन्त देवाः।
तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानस्सचन्ते।
यत्र पूर्वे साध्यास्सन्ति देवाः॥ ३९॥
पूरुषः पुरोऽग्रतोऽजायत कृतोऽकल्पयन्नासन्द्वे च॥ १२॥

( ज्यायानधि पूरुषः। अन्यत्र पुरुषः॥ )

)

[[3-13-1]]
अद्भ्यस्संभूतः पृथिव्यै रसाच्च।

विश्वकर्मणस्समवर्तताधि।
तस्य त्वष्टा विदधद्रूपमेति।
तत्पुरुषस्य विश्वमाजानमग्रैं।
वेदाहमेतं पुरुषं महान्तम्।
आदित्यवर्णं तमसः परस्तात्।
तमेवं विद्वानमृत इह भवति।
नान्यः पन्था विद्यतेऽयनाय।
प्रजापतिश्चरति गर्भे अन्तः।
अजायमनो बहुधा विजायते॥ ४०॥

[[3-13-2]]
तस्य धीराः परिजानन्ति योनिम्।
मरीचीनां पदमिच्छन्ति वेधसः।
यो देवेभ्य आतपति।
यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातः।
नमो रुचाय ब्राह्मये।
रुचं ब्राह्मं जनयन्तः।
देवा अग्रे तदब्रुवन्न्।
यस्त्वैवं ब्राह्मणो विद्यात्।
तस्य देवा असन्वशें।
ह्रीश्च ते लक्ष्मीश्च पत्न्यौं।
अहोरात्रे पार्श्वे।
नक्षत्राणि रूपम्।
अश्विनौ व्यात्तम्।
इष्टं मनिषाण।
अमुं मनिषाण।
सर्वं मनिषाण॥ ४१॥
जायते वशें सप्त च॥ १३॥

[[3-14-1]]
भर्ता सन्भ्रियमाणो बिभर्ति।
एको देवो बहुधा निविष्टः।
यद भारं तन्द्रयते स भर्तुम्।
निधाय भारं पुनरस्तमेति।
तमेव मृत्युममृतं तमाहुः।
तं भर्तारं तमु गोप्तारमाहुः।
स भृतो भ्रियमाणो बिभर्ति।
य एनं वेद सत्येन भर्तुम्।
सद्यो जातमुत जहात्येषः।
उतो जरन्तं न जहात्येकम्॥ ४२॥

[[3-14-2]]
उतो बहूनेकमहर्जहार।
अतन्द्रो देवस्सदमेव प्रार्थः।
यस्तद्वेद यत आबभूव।
सन्धां च याꣳ संदधे ब्रह्मणैषः।
रमते तस्मिन्नुत जीर्णे शयाने।
नैनं जहात्यहस्सु पूर्व्येषु।
त्वामापो अनु सर्वाश्चरन्ति जानतीः।
वथ्सं पयसा पुनानाः।
त्वमग्निꣳ हव्यवाहꣳ समिन्थ्से।
त्वं भर्ता मातरिश्वा प्रजानाम्॥ ४३॥

[[3-14-3]]
त्वं यज्ञस्त्वमु वेवासि सोमः।
तव देवा हवमायन्ति सर्वे।
त्वमेकोऽसि बहूननुप्रविष्टः।
नमस्ते अस्तु सुहवो म एधि।
नमो वामस्तु श्रृणुतꣳ हवं मे।
प्राणापानावजिरꣳ संचरन्तौ।

ह्वया॑मि वा॒ं ब्रह्म॑णा तू॒र्तमे॑त᳚म्।
यो मां द्वेष्टि॒ तं ज॑हितं युवाना।
प्राणा॑पानौ सं॑विदा॒नौ ज॑हितम्।
अ॒मुष्यासु॑ना॒ मा सं॑ग॑साथाम्॥ ४४॥

[[3-14-4]]
तं मे॑ देवा॒ ब्रह्म॑णा सं॑विदा॒नौ।
व॒धाय॑ दत्त॒ं तम॒हꣳ ह॑नामि।
अस॑ज्जजान स॒त आब॑भूव।
यंयं॑ ज॒जान॒ स उ॑ गो॒पो अ॑स्य।
य॒दा भा॒रं त॒न्द्रय॑ते॒ स भर्तु᳚म्।
प॒रास्य॑ भा॒रं पु॒नरस्त॑मेति।
तद्वै त्वं प्रा॒णो अ॑भवः।
म॒हान्भोग॑ः प्र॒जाप॑तेः।
भुज॑ः करि॒ष्यमा॑णः।
यद्दे॒वान्प्राण॑यो॒ नव॑॥ ४५॥
एक॑ं प्र॒जाना᳚ं गसाथा॒ं नव॑॥ १४॥

[[3-15-1]]
हरि॒ꣳ हर॑न्तमनु॑यन्ति दे॒वाः।
वि॒श्वस्येशा॑नं वृष॒भं म॑ती॒नाम्।
ब्रह्म सरू॑पमनु मे॒दमागा᳚त्।
अय॑नं॒ मा विव॑धी॒र्विक्र॑मस्व।
मा छि॑दो मृत्यो॒ मा व॑धीः।
मा मे॒ बल॒ं विवृ॑हो॒ मा प्रमो॑षीः।
प्र॒जां मा मे॑ रीरिष॒ आयु॑रुग्र।
नृ॒चक्ष॑सं त्वा ह॒विषा॑ विधेम।
स॒द्यश्च॑कमा॒नाय॑।
प्र॒वेपा॒नाय॑ मृ॒त्यवे᳚॥ ४६॥

[[3-15-2]]

प्रास्मा आशा अशृण्वन्न्।
कामेनाजनयन्पुनः।
कामेन मे काम आगात्।
हृदयाद्धृदयं मृत्योः।
यदमीषामदः प्रियम्।
तदैतूप मामभि।
परं मृत्यो अनुपरेहि पन्थाम्।
यस्ते स्व इतरो देवयानात्।
चक्षुष्मते शृण्वते ते ब्रवीमि।
मा नः प्रजाꣳ रीरिषो मोत वीरान्।
प्र पूर्व्यं मनसा वन्दमानः।
नाधमानो वृषभं चर्षणीनाम्।
यः प्रजानामेकराण्मानुषीणाम्।
मृत्युं यजे प्रथमजामृतस्य॥ ४७॥
मृत्यवे वीराꣳश्चत्वारि च॥ १५॥

[[3-16-1]]
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य।
विश्वमाभासि रोचनम्।
उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिस्सूर्याय त्वा भ्राजस्वते॥ ४८॥ ॥ १६॥

[[3-17-1]]
आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः।
भवा नस्सप्रथस्तमः॥ ४९॥ ॥ १७॥

[[3-18-1]]
ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छन्तीमुषसं मर्त्यासः।
अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान्॥ ५०॥ ॥ १८॥

[[3-19-1]]
ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा

सादया॒मि॒ ज्वल॑न्तीं त्वा सादयामि मल्मला॒ भव॑न्तीं त्वा सादया॒मि॒ दीप्य॑मानां त्वा सादया॒मि॒
रोच॑मानां त्वा सादया॒म्यज॑स्रां त्वा सादयामि  बृ॒हज्ज्यो॑तिषं त्वा सादयामि बो॒धय॑न्तीं त्वा सादया॒मि॒
जाग्र॑तीं त्वा सादयामि॥ ५१॥ ॥ १९॥

[[3-20-1]]
प्र॒या॒साय॒ स्वाहा॑ऽऽया॒साय॒ स्वाहा᳚ विया॒साय॒ स्वाहा॑ संया॒साय॒ स्वाहो᳚द्या॒साय॒ स्वाहा॑ऽवया॒साय॒
स्वाहा॑ शु॒चे स्वाहा॒ शका॑य॒ स्वाहा॑ तप्य॒त्वै स्वाहा॒ तप॑ते॒ स्वाहा᳚ ब्रह्मह॒त्यायै॒ स्वाहा॒ सर्व॑स्मै॒ स्वाहा᳚॥
५२॥ ॥ २०॥

[[3-21-1]]
चि॒त्तꣳ सं॑ता॒नेन॑ भ॒वं य॒क्ना रु॒द्रं तनि॑म्ना पशु॒पति॑ꣳ स्थूलहृ॒द॒येना॒ग्निꣳ हृद॑येन रु॒द्रं लोहि॑तेन श॒र्वं
मत॑स्नाभ्यां महादे॒वम॒न्तः पा᳚र्श्वेनौषिष्ठ॒हनꣳ शिङ्गीनिको॒श्या᳚भ्याम्॥ ५३॥ ॥ २१॥

चित्ति॑ः पृथि॒व्या॑ग्नि॒स्सूर्यं॑ ते॒ चक्षु॒र्महा॑हवि॒र्होता॒ वाग्घोता᳚ ब्राह्म॒ण एक॑होता॒ऽग्निर्यजु॒र्भि॒स्सेनेन्द्र॑स्य
दे॒वस्य॑ सु॒वर्णं॑ घ॒र्मꣳ स॒हस्र॑शीर्षा॒ऽब्धो भ॒र्ता हरिं॑ त॒रणि॒राप्या॑यस्वे॒युष्टे ये ज्योति॑ष्मतीं प्र॒या॒साय॑
चि॒त्तमेक॑विꣳशतिः॥ २१॥

चित्ति॑र॒ग्निर्य॑जु॒र्भिर॒न्तः प्रवि॑ष्टः प्र॒जाप॑ति॒ः प्र॒जया॑ संवि॒दा॒नस्तस्य॒ धीरा॒ ज्योति॑ष्मतीं त्रि॒प॑ञ्चा॒शत्॥
५३॥

चित्ति॑श्शिङ्गीनिको॒श्या᳚भ्याम्॥

[[3-0-0]]
तच्छं॒ योरावृ॑णीमहे।
गा॒तुं य॒ज्ञाय॑।
गा॒तुं य॒ज्ञप॑तये।
दैवी᳚ स्व॒स्तिर॑स्तु नः।
स्व॒स्तिर्मा॑नु॒षेभ्यः।
ऊ॒र्ध्वं जि॑गातु भेष॒जम्।
शं नो॑ अस्तु द्वि॒पदे᳚।
शं चतु॑ष्पदे॥

